रोगापायविधायिनं प्रणमतां द्रागातुराणां सतां
    रागाविष्टतदप्रविष्टमनसां भोगापवर्गप्रदं ।
योगाभ्यासवशंवदात्महृदयं स्वागारयन्तम्मुदा
    नागाधीश्वरभूषणं भज सखे नागाधिराजीसखम् ॥ ८ ॥

प्रागीषत्कुपितः स्मरं व्यतत यो द्रागीश्वरो भस्मसात्
    भोगी सार्धमगाधिराजसुतया रागीव यो लक्ष्यते ।
भोगीन्द्राभरणं सुरासुरनरस्त्रीगीतकीर्तिं महा-
    योगीन्द्रं प्रणमामि तं पशुपतिं वागीश्वराद्यर्चितम् ॥ ९ ॥

तुंगादभ्रसुशुभ्रभूधरमहाश्रृंगाग्रसौधस्थितं
    श्रृंगारोचितवेषभूषणधरं गंगाधरं शंकरम् ।
अंगासंगिसुमंगलांगिगिरिजाभंगांकपालीभृता-
    नंगानन्दभरं शिवं शिवकरं पिंगालिकाक्षं भजे ॥ १० ॥

मोघाऽभूत क्वचिदप्यहो न यदिषुस्सोऽघारिपुत्रःस्मरो
    व्याघान्याशु यदीक्षणेन सततोल्लाघा यदीया जनाः ।
योऽघानि स्मृतिमात्र एव भविनां व्याघातयत्यञ्जसा
    मेघापायसुधाममयूखधवलं श्लाघामहे तं शिवम् ॥ ११ ॥

---

८. स्वागारयन्तं - स्वगृहं कुर्वन्तं । नागाधिराजीसखं - पार्वतीसखं - पार्वतीवल्लभं ।

९. व्यतत - कृतवान् ।

११. अघारिपुत्रः - श्रीकृष्णात्मजः । व्याघानि - संहृतः । संततोल्लाघाः - सन्ततारोग्यशालिनः ।

प्राचामाचतुरास्यमात्मविदुषामाचार्यमेकं परं
शौचाचारपरैरकर्तृकभुवां वाचां प्रबुद्धाशयैः ।
आचान्तागमसागरैर्मुनिवरैर्वाचान्मधीसेवितं
भ्रूचापल्यकृताखिलं पुरहरं याचामहे मंगलम् ॥ १२ ॥

मोचासारसुचाविधिप्रभृतिभिर्वाचा प्रणीतस्तवं
नीचामप्यनुचिन्तितात्ममनसां खेचारिराज्यप्रदम् ।
आचार्यैर्निजमूर्त्तिभिर्मुहुरसद्वाचालवादांबुधी-
नाचामन्तमनादिमध्यनिधनं याचामहे तं शिवम् ॥ १३ ॥

प्राचीशादिसमर्चितं प्रतिहताऽवाचीश्वराहंकृतिं
नीचीभूतसुरासुरेश्वरमतिप्राचीनमात्मेश्वरम् ।
वीचीशीतलमौलिमप्रसरितस्सूचीशिखा धीमतो-
दीचीशेननिबद्धसख्यमखिलावाचीनमीशं भजे ॥ १४ ॥

स्वच्छान्तःकरणैस्सदापरिचितं प्रच्छायपादांबुजं
विच्छाये भवधन्वनि प्रचरतामच्छामृतांशुप्रभम् ।
इच्छागोचरमाश्रितस्य सकलं विच्छाययन्तं करं
गच्छामश्शरणं शिवं शिवकरं सच्छास्त्रयोनिं परम् ॥ १५ ॥

---

१४. अखिलावाचीनं - अखिलाः अवाचीनाः पाश्चात्याः यस्मात् तं ।
विश्वादिकारणं इत्यर्थः ।

१५. विच्छाययन्तं - प्रापयन्तं ।

गच्छाम त्रिपुरारिमेवशरणं यच्छाम तस्मै मतिं
स्वच्छान्तं प्रणताश्वराचरगुरुं पृच्छाम तत्वं परम् ।
सच्छास्त्रेषु कृपारसैकपरवानिच्छां स नः पूरये-
त्तुच्छां संसृतिमुत्तराम परमामृच्छाम तां निर्वृतिम् ॥ १६ ॥

आजानामलकीर्तिमात्मनि परिव्राजां स्फुरन्तं सदा
श्रीजानिप्रमुखामरार्चितपदं राजावतंसं प्रभुम् ।
पूजां जातु वितन्वतां निजपदे भूजानितादं भजे
बीजापूरफलप्रभामदहरेरोजाद्रिजालिंगितम् ॥ १७ ॥

शिञ्जानोज्वलरत्ननूपुरपदं कञ्जासनाचर्चितं
शिञ्जाकुण्डलहारितोरगपतिं गुञ्जारुणाभाधरम् ।
कुञ्जान्तर्गिरिकन्यया सहरहो भुञ्जानमाद्यं रसं
तं जातुस्मरतामघौघशमनं कंजारिचूडं भजे ॥ १८ ॥

प्रज्ञा यस्य समस्तवस्तुविषयाभिज्ञा सदा भासते
विज्ञा यं समुपासते हृदि परं जिज्ञासवस्तत्पदम् ।
आज्ञा यस्य खलु त्रयी भगवती प्रज्ञानरूपं शिवं
विज्ञानप्रतिपत्तये तमनिशं यज्ञान्तकं भावये ॥ १९ ॥

---

१८. कंज़ा......चिंतं - ब्रह्मादिपूजितं । शिञ्जा......पतिं - शिञ्जा-कुण्डलहारिताः - मौर्वीकर्णभूषणमुक्ताहारीकृताः उरगपतयः येन तं ॥ आद्यं रसं - शृंगाररसं । कंजारिचूडं - चन्द्रचूडम् ।

चेटीभूतसुरासुरेन्द्रमकुटीकोटीविराजन्मणी-
कोटीचुंबितलालसन्मणितुलाकोटीकपादांबुजम् ।
पाटीरद्रवगन्धवत्कुचतटीशाटीकगौरीमुखात्
वीटीमाददतं मुखेन सरसां खाटीशमीडे शिवम् ॥ २०

दुष्टानां सदुपप्लवेकृतधियान्तष्टारमीड्यं सता-
मष्टाकारमशेषरक्षणचणं तुष्टांतरंगं शिवम् ।
शिष्टानां परिपालने कृतमतिं प्लुष्टामरद्विट्पुरं
स्रष्टारं जगतां त्रयस्य भजतामिष्टार्थदायं भजे ॥ २१ ॥

कुण्ठा यस्य शराः क्वचिन्न ललनोत्कठाकरास्स स्मरः
कुण्ठास्त्रोऽजनियद्दृशोषिततनुः कण्ठास्तहालाहलम् ।
कण्ठासक्तभुजामृणाललतवैकुण्ठानुजालिंगितं
रुण्ठामश्शरणं शिवं मधुसुधाकण्ठामरीभिस्तुतम् ॥ २२ ॥

शुण्डालेश्वरवर्तुलायतबृहच्छुण्डाप्रकाण्डैस्समं
दण्डादण्डिकुतूहलाकुलभुजादण्डात्तचण्डायुधम् ।
चण्डाभीशुसुधांशुपावकदृशं खण्डाब्जचूडामणिं
हिण्डामःशरणं शिवं सितलसद्गण्डांबिकालिंगितम् ॥ २३

---

२०. खाटीशं–देवतासार्वभौमं ।

२१. तष्टारं– भेत्तारं ।

२२. उषिततनुः–दग्धशरीरः । रुण्ठामः–गच्छामः

२३. हिण्डामः–गच्छामः

पिण्डीभूतसुधाब्धिपुष्करनदीडिण्डीरखण्डप्रभं
चण्डीभूय बलेन संप्रहरते गाण्डीवनेऽभीष्टदम् ।
कुण्डीसंभवतापसातिबलदं काण्डीकृताधोक्षजं
चण्डीमण्डितवामदक्षविलसद्धुण्डीभवक्त्रं भजे ॥ २४ ॥

क्रीडा यस्य विचित्रविश्वकलना पीडायते चन्द्रमा-
श्चूडारत्नमरीचिभिर्दिविषदां चूडालिनांघ्रिद्वयम् ।
पीडाकार्यसुरप्रशासनकरं क्रीडागृहं संपदां
क्रोडाश्लिष्टशिवं यथामतिपदैरीडामहे तं शिवम् ॥ २५ ॥

गूढात्मानमशेषजन्तुषु भजे प्रौढाद्रिराजात्मजा-
गाढात्युच्चबृहत्पयोधरभरोद्गाढांकपालीरतम् ।
वोढारं शिरसा सुपर्वसरितो मूढात्मभिर्दुर्लभं
सोढारं भजदागसां सुकृतिभिर्लीढांघ्रिसेवारसम् ॥ २६ ॥

एणांकायुतबिंबकान्तिवदनं शोणाधरं सुन्दरं
वीणापाणिमुनीन्द्रवन्दितपदं काणादधीमार्गितम् ।
स्त्रैणातीतगुणोत्तराद्रितनयाप्राणाधिपं शाश्वतं
प्रीणाना हृदयं गिरां पुरहरं बाणार्चितांघ्रिं भजे ॥ २७ ।

वेणीमल्लितपारिजातकुसुमश्रेणीकपीनस्तन-
श्रोणीकांकनिषण्णलालितहिमक्षोणीध्रकन्यामणिम् ।
वाणीशादिसुरेशमौलिमणिभिश्शोणीकृतांघ्रिं शिवं
तूणीभूतपयोधिमंबरनदीवेणीधरं भावये ॥ २८ ॥

---

२७. प्रीणानां–पुरातनीनां ।

त्रीणीयानिजगन्ति येन विपुलश्रोणीकुचोरुश्रियां
एणीशाबदृशां वशे विदधिरे बाणीकृतांभोरुहा ।
क्षीणीभावमनायि येन स दृशा शोणीभवन्त्या रुषा
क्रीणीमोऽस्य नमोऽर्प्पणेन करुणां क्षोणीध्रकन्यापतेः ॥ २९ ॥

नेतारं जगतां त्रयस्य तिसृणां जेतारमीशं पुरां
त्रातारं शरणागतस्य भजतां दातारमुच्चैर्गतेः ।
पातारं सकलस्य कल्पविलये भूतानुकंपानिधिं
शीताभीशुधरं भवांबुधिमहापोतांघ्रिमीडे शिवम् ॥ ३०

यातायातविधायिनां भवमरौ जातानुतापात्मनां
यातानां शरणं यदीयचरणं माता न भूयो भवेत ।
भीतानां भयनाशनं प्रणमतां पूतात्मभिस्सेवितं
भूतानामधिपं परात्परतरं शीतांशुमौलिं भजे ॥ ३१ ॥

वातांशैरुपसेव्यमानचरणं गीतापदानं सुरै-
र्वीताहारविभूषणं मृगधरं वेतालसंसेवितम् ।
पातालक्षितिनाकलोकनिलयैः पूताशयैर्वन्दितं
ज्ञाताशेषमचिन्त्यशक्तिमविनाभूतांबमीशं भजे ॥ ३२ ॥

हन्तारं सुरवैरिणां कमलभूयन्तारमुच्चैः पदं
नन्तारं गमयन्तमाशु भजतां चिन्तामणिं शाश्वतम् ।
रन्तारं विषयव्यपेतमनसामन्तारमेशार्चितं
सन्तापघ्नमुपास्महे स्मरयमाहन्ताहरं शंकरम् ॥ ३३ ॥

---

३३. अन्तः—अन्तःकरणे ।

शान्तानां विषयेष्वसक्तमनसां वान्तान्नवद् धीमतां
दान्तानां हृदि योगिनां विलसितं कान्तागृहीतार्धकम् ।
तान्तानामधिकं चिरं भवमहाकान्तारसञ्चारतः
श्रान्तानां शरणं यतां प्रशमितस्वान्तार्त्तिमीशं भजे ॥ ३४ ॥

भूतानामचरच्चरिष्णुवपुषां धातारमाजीवन
पीतान्नं पचमानमाशयचरं धूताखिलन्निर्मलम् ।
नेतारं रजनीदिनानि नियतिं होतारमात्मेश्वरं
त्रातारं जगतां व्रजामि शरणं शीताद्रिजावल्लभम् ॥ ३५ ॥

अर्थापत्यविबुद्धकर्तृकवचस्तीर्थावगाह्यं परं
तीर्था यं प्रतिपादयन्ति सुमनस्सार्थाय जिज्ञासवे ।
सार्था यत् पदमञ्चतां जनिताऽपार्था तथाऽनञ्चतां
पार्थाभीष्टदमाश्रये बहुविधाऽनर्थापहत्यै शिवम् ॥ ३६ ॥

आस्थामातनु मातनौ कतिपयाहःस्थायिनीयं यतः
प्रस्थानत्रयमेव शीलय सखे स्वस्थानलब्ध्यै सदा ।
नस्थायी विषयोऽखिलोऽपि विरसो दुःस्थाय संचिन्तितः
स स्थायी परमेश्वरो हृदि समावस्थासु सञ्चिन्त्यताम् ॥ ३७ ॥

---

३४. शरणं यतां=गच्छतां ।

३६. अञ्चतां=पूजयतां । जनिता=जन्म, सार्था=सार्थका अपार्था=निरर्थका ।

३७ दुस्थाय=दुःखाय । समावस्थासु=सर्वावस्थासु

वेदान्तप्रतिपाद्यमानविभवं नादान्तरूपं शिवं
गोदारेण गवेषणीयशिरसं श्रीदारमृग्यांघ्रिकम् ।
वेदादिं सुखबोधरूपमखिलोपादानमप्राकृतं
श्रीदारार्द्धमहं प्रपन्नसुखकृत्पादारविन्दं भजे ॥ ३८ ॥

सन्देशाः कृतकेतरा भणितयो मन्देतरा यस्य ता
यं देवं मनसाऽचलेनशरणं विन्देति संचक्षते ।
कुन्देन्दुद्युतिमिन्दुसुन्दरमुखं तं देवतानां प्रभुं
वन्देऽहं स दयेत मां शिवगुरुस्सन्देहलेशो न मे ॥ ३९

मन्दारद्रुमपल्लवांघ्रियुगलं वन्दारुपुण्यात्मनां
मन्दानामपि विन्दतां सुपटुतासन्दायकं स्वं पदम् ।
निन्दाहीनमुपेन्द्रवासवमुखैर्वृन्दारकैर्वन्दितं
विन्दामश्शरणं शिवं स्मरहरं नन्दाम भूयस्तराम् ॥ ४० ॥

आधारं जगतामनन्तसुखसद्बोधात्मकं शाश्वतं
क्रोधात्मातपुरत्रयं नरकृते व्याधायितं शंकरम् ।
बाधाहीननिजस्वरूपमितराऽसाधारणप्राभवं
प्राधान्यं त्रिषु दैवतेष्वधिगतं नाधामहे मंगलम् ॥ ४१ ॥

शुद्धान्तःकरणैरकृत्रिमगिरां बुद्धाशयैर्योगिभिः
बद्धांघ्रिं हृदि सन्ततं शशिकलानद्धात्तमौलिं हरम् ।
शुद्धान्तासितवामभागमनिशं सिद्धार्थयन्तं सत-
श्श्रद्धापूर्वमुपासकान् श्रुतिशिरस्सिद्धान्तमीडे शिवम् ॥ ४२

---

३८. गोदारेण = ब्रह्मणा ।

किं धातुर्नियमेन तस्य भविता संधाय चेतश्शिवे
  बन्धापायविधायके सुखसुधासिन्धावलं स्नाति यः ।
तं धावन्ति विचिन्त्य दूरमरयो बन्धावतोंऽभोरुहां
  अन्धाज्ञानतमस्ततेः कुरु मनोगन्धानजस्रं शिवे ॥ ४३ ॥

येनाविष्क्रियते चराचरमिदं नानाविधाकारकं
  येनापह्नियतेऽवसानसमये ज्ञानामृतांभोधिना ।
हानादानविवर्जितं चिरतरध्यानाभिगम्यं हरं
  सूनास्त्रस्मयभंजनं स्मर सखे दीनानुकंपानिधिम् ॥ ४४ ॥

श्रीनाथादिसमर्चितांघ्रिकमलं मीनाभिरामेक्षणां
  मेनायास्तनयां निजांकलसितां पीनाब्जकोशस्तनीम् ।
स्वेनाश्लिष्य भुजेन तन्मुखसुधापानानुषक्तं शिवं
  सेनानीजनकं सदा भज सखे ज्ञानाकरं शंकरम् ॥ ४५ ॥

आपातालनभस्तलान्तगतधीव्यापारसाक्षी महा-
  पापांभोनिधिकुंभसंभवनिभः श्रीपादसंभावनः ।
आपादाब्जनमत्सुरासुरकुलो द्वैपायनाद्यर्चितो
  नीपारण्यरतिप्रियोऽवतु शिवो द्वैपाजिनालंकृतः ॥ ४६ ॥

भूपालावलिमौलिलालितलसन्नीपावलीपूजित-
  श्श्रीपादांबुजपीठिकापरिसरः कापालिकैस्सेवितः ।
पापारण्यदवश्शिवः प्रणमतां रूपाधिकोमासखः
  तापानां शशिशेखरो वितनुतां सोऽपायमीशोंऽजसा ॥ ४७ ॥

तापाविष्टधियां चिरं सकृदयादापातुकानां नृणां
घोपालालयवैजयन्तवलभीसोपानपादांबुजम् ।
कोपापेतमनोभिराश्रितपदं शापायुधैस्तापसैः
आपादाग्रहिरण्मयं पशुपतिं प्रोपास्महे सन्ततम् ॥ ४८ ॥

आपीतं कृतपूर्वपुण्यनयनैः पापीयसां दुर्लभं
कौपीनव्रतधारिषु प्रणयिनं गोपीथसंसेविषु ।
वापीकल्पगभीरनाभिकुहरव्यापीनवक्षोरुह-
स्तूपीकाद्रिसुतोपगूढममृतांश्वापीडमीडे शिवम् ॥ ४९ ॥

शंपावल्लिमतल्लिकादशशतीसंपातकल्पश्रिया
पंपातीरकरीन्द्रकुंभगुरुतासंपादकोरोभुवा ।
कंपापेतपदार्थराजसुतयाऽलंपाणिसंलालितं
तं पादांबुजयोर्नमामि गिरिशं किं पावनैर्मेऽन्यकैः ॥ ५० ॥

कल्पानोकहवाटिकापरिवृतेऽनल्पार्घरत्नालये
शिल्पाभिज्ञविनिर्मिते मणिमयं तल्पाग्रमध्यासितम् ।
जल्पाकोज्वलरत्ननूपुरसुखाकल्पाभिरामाद्रिजा-
तल्पालिंगिनहर्षमाणहृदयं कल्पादिमीडे शिवम् ॥ ५१ ॥

अंबाध्यासितविग्रहं रुचिगृहं बिंबाधरं सुन्दरं
जंबालच्छविकन्धरं सितमहोबिंबाभिरामाननम् ।
शंबाकारमुदारमीशमतिलोलंबालिनीलालकं
तं बालेन्दुशिखामणिं हृदि समालंबामहे शंकरम् ॥ ५२ ॥

---

४९. गोपीथसंसेविषु—पुण्यतीर्थनिषेवकेषु ।
५०. कंपापेतपदार्थराजसुतया—पर्वतराजात्मजया ।
५२. शंबाकारं—मंगलमूर्तिं ।

आबालक्षितिपालमात्मविदितं जाबालिसंसेवितं
 साबाधं शरणं गतं करुणयाऽनाबाधयन्तं क्षणात् ।
ज्याबाणीकृतनागभोगिशयनं श्रीबाहुलेयप्रियं
 क्षीबाद्रीन्द्रजया भजे शिवमुशत्याबाढमालिंगितम् ॥ ५३ ॥

आभासीकृतचन्द्रकोटिमहसं स्वाभापरिस्फूर्तिभिः
 सौभाग्यातिशयोच्चयाद्रिसुतया बाभास्यमानं शिवम् ।
शोभाज्ञानबलक्रियाभिरनिशं स्वाभाविकीभिर्युतं
 लाभालाभविवर्जितं पुरहरं शीभामहे शंकरम् ॥ ५४ ॥

जंभारातिमुखामरार्चितपदं रंभादिगीतस्तवं
 रंभास्तंभवरोरुशैलसुतया संभावितोत्संगकम् ।
डिंभांभोरुहवैरिशोभिमकुटं डंभापहं विद्विषां
 तं भास्वद्विधुवीतिहोत्रनयनं संभावये धूर्जटिम् ॥ ५५ ॥

रंभोरूरुनितंबबिंबविलसद्रंभोर्वशीमेनका-
 रंभोर्ध्वद्युवधूशिरोविधृतपादांभोजधूलीकया ।
संभोगादृतया गिरीन्द्रसुतया कुंभोपमोरोभुवा
 शंभोस्संस्मर हे मनः कृतपरीरंभोत्सवस्याऽनिशम् ॥ ५६ ॥

वामांकोपनिवेशितप्रियतमं सोमार्धचूडामणिं
 कामापादनकल्पकद्रुमसहङ्नामावलीकीर्तनम् ।
सीमानं गुणसंपदामुपनिषत्प्रामाण्यगम्यं परं
 श्यामाकामुकबिंबकोटिविलसद्धामानमीडे शिवम् ॥ ५७ ॥

---

५३. उशत्य-कामयमानया ।
५४. शीभामहे–श्लाघामहे ।

वामे पर्वतकन्यकाविलसितं वामेतरेभाननं
नेमेन्दुप्रतिभासमानमकुटं भूमेतिनिर्धारितम् ।
कोमेऽस्त्यत्र समप्रभावक इति क्षामेतराहंकृतौ
कामे कल्पितशिक्षणेक्षणकणं कामेश्वरं भावये ॥ ५८ ॥

पद्मावल्लभपद्मसंभवमनस्सद्मानमात्मेश्वरं
छद्मापेतमनोजनप्रणयिनं सद्माननीयं प्रभुम् ।
सद्मातंगवरांगकुंभकुचया पद्माभिरामास्ययाऽ-
स्मद्मात्रा शिवया समाश्रिततनुं विद्माऽनपायं पदम् ॥ ५९ ॥

धर्माधर्मफलप्रदं तनुभृतान्निर्मायमातन्वतां
कर्माणि श्रुतिचोदितानि ददतं शर्माणि सर्वेश्वरम् ।
निर्मायात्मनि माययैव सकलं निर्मापयन्तं पुनः
नर्माद्रीशजया समं विदधतं भर्माभयेशं भजे ॥ ६० ॥

जन्माद्यस्य यतोऽखिलस्य जगतो यन्मानमाद्या गिरो
यन्माया विधिविष्णुवासवमुखानुन्मादयत्यञ्जसा ।
यन्माहात्म्यमगोचरं मतिगिरोः सन्मानसाधिष्ठितं
चिन्मात्रं परमेश्वरं तमनिशं मन्मानस ध्याय तम् ॥ ६१ ॥

छायाव्याप्तचराचरस्य सुबहुव्यायामशाखाविको-
च्छायामर्त्यतरोस्तले मुकुरसच्छायात्मवेदौस्थितम् ।
कायाभीशुजितामृतांशुनियुतं जायासमेतं बुधैः
मायाहीनमुपास्यमानचरणं ध्यायामि विश्वेश्वरम् ॥ ६२ ॥

---

६०. भर्मामया—सुवर्णकान्त्या ।

नित्यानित्यविवेकमुख्यकरणैः प्रत्याहृताक्षाशयैः
श्रुत्या साधुविचारितं शमधनैर्मत्या सुनिर्धारितम् ।
सत्यानन्दचिदात्मकं सुविमलं गत्यागतिप्रोज्झितं
सत्यालिंगितविग्रहं शशिधरं कृत्यावृतांगं भजे ॥ ६३ ॥

श्रुत्या संप्रविचार्य संयमधनैर्युक्त्या मुहुश्चिन्तितं
धृत्यात्मेति गृहीतमात्मनि धिया भक्त्या सदा पूजितम् ।
कृत्याकृत्यविवर्जितं पशुपतिं सत्या गृहीतार्धकं
नित्यानन्दमनन्तमक्षरमजं स्मृत्यात्मनि स्थापये ॥ ६४ ॥

श्रेयांसि प्रतिपादयन्तमयतां भूयांसि पादं निजं
श्रेयांसं ससुरासुरे त्रिभुवने ज्यायांसमाकाशतः ।
प्रेयांसं कुलशैलपालदुहितुर्मायां समुत्तीर्यतां
स्यायां संविदि सन्निषण्णमनिशं स्थेयांसमीशं भजे ॥ ६५ ॥

आर्या यं प्रवदन्ति खाग्न्यनिलभूवार्यात्मकानां जगत्-
कार्याणां प्रभवस्थितिक्षयकरं हार्याकृतिं शंकरम् ।
आर्यामंकनिषेदुषीं प्रमुदितं भार्यां समालिंग्य तां
शार्यारावगिलां नमामि रजताहार्यालयं शूलिनम् ॥ ६६ ॥

कार्याकार्यविवर्जितं पशुपतिं धैर्याभिभूताचलं
शौर्यापास्तखलं सुरासुरगुरुं गौर्यासमालिंगितम् ।
आर्यावर्त्तनिवासिभूरिनिगमाचार्यार्चितं शाश्वतं
सूर्याब्जाग्निविलोचनं स्मरहरं शौर्यादिवन्द्यं भजे ॥ ६७ ॥

---

६३. कृत्या—गजेन्द्रचर्मणा ।

गम्यागम्यविवर्जितं श्रुतिशिरोगम्यात्मतत्वं शिवं
रम्याणामपि रम्यमीश्वरशिरोनम्यांघ्रिपंकेरुहं ।
यम्यात्मानमधिष्ठितं परिहृतौपम्यात्मभासोमया
क्रम्यांकं परिरब्धमात्तपुलकं शम्याकमौलिं भजे ॥ ६८ ॥

धन्यानां शुभकर्मधौतमनसां संन्यासिनामाशये
संन्यासीकृतपादपद्मयुगलं जन्यामयध्वंसनम् ।
अन्यासामिव रूपसाररचितां कन्यामणीनांगिरेः
कन्यां संपरिरभ्य संप्रमुदितं मन्यामहे शंकरम् ॥ ६९ ॥

अध्यासीनमगेन्द्रशृंगनगरीमध्यासिसौधान्तरं
प्रध्यायन्तमनन्तचिद्घनसुखं बुद्ध्यात्मरूपं शिवम् ।
निध्यायन्तमगेन्द्रजामुखविधुं विध्यादिभिस्सेवितं
सुध्याराध्यमभीष्टदं कलयतामध्यासये मे मनः ॥ ७० ॥

विद्यानामधिपं चराचरगुरुं हृद्यानवद्याकृतिं
हृद्याधाय तरन्ति जन्मजलधिं विद्याविदो यं प्रभुम् ।
अद्यामुं शिवमद्वितीयममलं यद्याश्रयेथास्सखे
तद्यायाश्शिवमव्ययं पदमये यद्यायिनो जन्म नो ॥ ७१ ॥

यं ध्यायन्ति विपश्चितः प्रतिदिनं सन्ध्यासु भूमीसुराः
वन्ध्या यस्य कदापि नैवभविताऽवन्ध्यार्थनामस्मृतिः ।
तं ध्यानेन महेश्वरं हृदि सदा रुन्ध्यात्मनाथं शिव
भिन्ध्याशां विषयेऽवसानविरसे विन्ध्याचलस्तंभिवत् ॥ ७२ ॥

---

७२. विन्ध्याचलस्तंभिवत् = अगस्त्यवत् । रुन्धि = स्थापय, भिन्धि = संहर ।

कल्याणाचलकार्मुकाय विबुधावल्याभिवन्द्यांघ्रये
 कल्यासंगमलाऽपहारिनमसे तुल्यात्मनेदीयसे ।
कुल्याकल्पितजन्मवारिनिधये कल्यात्मने मन्मनो
 मल्याकल्पितशैलजामृदुभुजावल्याश्रितायार्प्पये ॥ ७३ ॥

वैद्यं संसृतिरोगिणां क्रतुभुजामाद्यं परं दैवतं
 वेद्यं वेदशिरोगिरा विमलयाऽनाद्यन्तमध्यं शिवम् ।
माद्यन्तं परिरभ्य शैलतनयां स्वाद्यन्तदीयाधरं
 माद्यन्तं परिपीय भक्त्यतिशयासाद्यं भवं भावये ॥ ७४ ॥

अव्याजं भजतामनन्यमनसां भव्यार्थविश्राणने
 दिव्यारामतरुप्रवालचरणं छव्या जितेन्दुप्रभम् ।
सव्यांकस्थितया गिरीन्द्रसुतया नव्यारुणाभिख्यया
 सव्याजं परिरभ्यचुंबितमुखं स्वात्मजारिं भजे ॥ ७५ ॥

आराध्यांघ्रिसरोरुहं सुमनसां स्वाराज्यमासेदुषां
 वैराग्यं समुपेयुषां हृदि सदा वीरासने सुस्थितम् ।
आरान्नम्रसुरीशिरोमणिरुचा नीराजितांघ्र्योमया
 राराजन्निजवामभागमनघं मारारिमीडे शिवम् ॥ ७६ ॥

आरामे हरिचन्दनैः परिवृते हीरावलीकल्पिता·
 गारान्तर्नवरत्नजालरचिते वीरासने सुस्थितम् ।
आराद्धं गिरिशं सुरासुरवरैर्हारावलीभूषया
 पारावारपटीधरेन्द्रसुतया राराज्यमानं भजे ॥ ७७ ॥

---

७३. तुल्यात्मनेदीयसे=समबुद्धिस्थिताय, कल्यात्मने=कुशलात्मने

कारागारसमेऽवसानविरसे दारात्मजन्मप्रिया-
गारादौ विषये भजस्व परमं वैराग्यमात्मन् सखे ।
सारात्सारतरं सदा कलय संसाराब्धिनिस्तारकं
तारानायकशेखरं स्मरहरं नारायणीवल्लभम् ॥ ७८ ॥

मित्रामित्रसमोभव त्यज सखे पुत्रार्थदारैषणा
कुत्राप्यावस निर्जने वितनु वा सत्रा बुधैस्संगमम् ।
यत्राद्धा विदिते परत्रनभवेच्चित्रा पुनस्संसृति-
स्तत्रात्मन्यनुरज्य सौख्यजलधौ मित्रात्मजारौ शिवे ॥ ७९

मात्राणां सुखदुःखमोहकरता धात्रा स्वयंकल्पिता
नात्रासक्तिमुपेहि तत्परिचयात् स्यात्रासएवाधिकः ।
यात्रायां शयने स्थितौ विहरणे गात्रार्थकृत्येऽखिले
गोत्राधीशसुतापतिं स्मर दिवा रात्रावपि श्रेयसे ॥ ८० ॥

चैत्रीषु प्रसृतेन्दुकान्तिविलसद्रात्रीषु रूप्योल्लसद्
धात्रीभृत्तटमन्दिरेषु दिविषद्धात्रीरुहामन्तरे ।
मैत्रीसंभृतरूपयौवनलसद्धात्रीसुमां शर्मणां
दात्रीमुल्लसयन्तमीशमनिशं पात्रीकुरुष्वात्मनः ॥ ८१ ॥

भद्राणि प्रतनोतु नस्स विपदो विद्रावयेदीश्वरो
मुद्रापुस्तकशोभिपाणिकमलो रुद्राक्षमालाधरः ।
भद्राधीश्वरवाहनो हृदि सतामुद्राजमानो मुदा
रुद्राणीपरिरंभणप्रमुदितस्सद्राजचूडामणिः ॥ ८२ ॥

मंत्राणामधिदैवतेन सुमहातंत्राभिधेयात्मना
यंत्राणां प्रतिपादनेन जगतां संत्राणमातन्वता ।
संत्रासं हरता सतां तनुभृतां यंत्रा जगद्द्रोहिणां
हंत्रा सन्ततमद्रिराजसुतया रंत्रासनाथा वयम् ॥ ८३ ॥

अप्राप्यैव निवर्तते सहधिया सुप्राक्तनी वाग्यतो
यत् प्राहुर्जगतां निदानमनघं यत्प्राप्य नावर्तते ।
विप्राणां कुलदैवतं सुकृतिनां सुप्रापपादांबुजं
तृप्राणां शमनं मनः स्मर हरं क्षिप्राभिनन्द्यं शिवम् ॥ ८४ ॥

हारीभूतफणीश्वरं श्रुतिशिरःपारीणवेद्यं शिवं
नारीभूतरमाधवं शशिकलाधारीकृतात्माश्रितम् ।
गौरीत्या जितवल्लकीपरभृताशारीगिरं सुन्दरीं
गौरीं संरमयन्तमाशु भजतां दूरीकृतार्तिं भजे ॥ ८५ ॥

कैलासाचलशृंगभाजि सुमनस्सालावलीसंवृते
बालार्केन्दुघनप्रवालमणीजालाभिनिर्वर्तिते ।
लीलावेश्मनि पद्मिनीतटगते बालां धरित्रीभृतः
खेलाभी रमयन्तमीशमनिशं कालान्तकं भावये ॥ ८६ ॥

आलापेन जितान्यपुष्टवनितां नीलालकालिं शिवाम्
बालां बालमृणालकोमलभुजां शैलाधिराजात्मजाम् ।
लीलालालसमानसां परिचरन् मालाप्रदानादिभिः
सालापं विहरन् हरो हरतु मे जालानि सर्वैनसाम् ॥ ८७ ॥

---

८४. तृप्राणां = दुःखानां

नालीकासनसूतवान् मधुजिता नालीकवान् भूरथी
नालीकासनवानगाधिपतिना नालीकसंभाषणः ।
चूलीलालितपारिजातसुमनःपालीं समुल्लासयन्
केलीलालसमानसां दिशतु मे कालीं शिवं त्र्यंबकः ॥ ८८ ॥

फाले पावकलोचनं कटितटे कालेभचर्मांबरं
शूलेन क्षतविद्विषं फणभृतांजालेन संभूषितम् ।
कालेकल्पितविश्वसर्गविलयं शैलेन्द्रशृंगालयं
प्रालेयाचलकन्यकासहचरं बालेन्दुमौलिं भजे ॥ ८९ ॥

देवानां मुहुरागतैः परिवृढैस्सेवार्थमाराद्वृत-
स्वावासांकणमागमेषु कुशलैर्नीवारपाकाशनैः ।
आवाद्यार्चितमात्मलिंगभजनेनावाप्तसर्वोन्नतेः
भावाद् बाणमहासुरस्यनगरे दौवारिकेशं भजे ॥ ९० ॥

विश्वामित्रपराशरप्रभृतिभिर्निश्वाससंरोधिभि-
र्विश्वासेन सदा हृदा परिचितं विश्वाधिकं शंकरम् ।
अश्वास्यात्मतया स्वभक्तजनतामाश्वास्य संसारिणीं
आश्वात्मप्रदमाश्रयेऽखिलकलाहश्वानमीशं शिवम् ॥ ९१ ॥

सर्वाभीष्टदमर्चतां स्वचरणं दुर्वाससा सेवितं
गर्वावेशहरं विधेरपि हरेर्निर्वाणदं शाश्वतम् ।
शर्वाण्या परिरब्धसुन्दरतनुं पर्वाब्जबिंबास्यया
दुर्वारस्मरकालदुर्मदहरं स्वर्वासिनाथं भजे ॥ ९२ ॥

मन्वानं निजरूपमेव सततं धिन्वानमात्माश्रितान्
 तन्वानं सकलं चराचरमिदं चिन्वानमात्मेच्छया ।
मन्वादिस्मृतिचोदितेन विधिनाऽतन्वादरं पूजितं
 तन्वाश्लिष्टशिवं सुरालयमहाधन्वानमीशं भजे ॥ ९३ ॥

आशापालनिषेविताङ्घ्रिमखिलक्लेशापहारं सतां
 आशापाशविमोचनं प्रणमतामाशासितार्थप्रदम् ।
ईशानं जगतां शरत्प्रविलसत्काशाभिरामाकृतिं
 नाशायाघततेर्नमामि गिरिशं नीशारिते भाजिनम् ॥ ९४ ॥

दाशार्हेण निषेव्यमाणचरणं पाशांकुशोद्यत्करं
 वैशारद्यविधायिनं प्रणमतामाशावसानं शिवम् ।
केशाध्यासितनाकलोकसरितं पैशाचकेलिप्रियं
 वैशाखेन्दुमनोहरं स्मरहरं क्लेशापहत्यै भजे ॥ ९५ ॥

आशीर्वादविधायिनं प्रणमतामाशीविषालंकृतं
 काशीवासरसाकुलं सुखपयोराशीकृतात्माश्रितम् ।
पेशीसंभवमौक्तिकैरलिलसत्केशीमलंकृत्य तां
 या शीताचलकन्यका कृतरतिं प्राशीलये शंकरम् ॥ ९६ ॥

दोषानायकशेखरं तनुलसद्घोषामणिं शंकर
 शेषाशीविषभूषणं प्रतिपदाऽशेषागमाभिष्टुतम् ।
काषायांबरधारिणां नियमिनां आषाढिनां सम्मतं
 दोषाऽपायकृते शिवं तनुमनोभाषाभिराराधये ॥ ९७ ॥

श्वासो यस्य गिरश्चिरंतनतरा वासोगिरी राजतो
वासो वासवमुख्यपालितपुरो हासोऽदहत्पूस्त्रयम् ।
व्यासो यस्य गुणान् पुराणवचनैर्व्यासोदितैरादिशत्
दासोऽहं गिरिशस्य तस्य भगवान् मां सोऽनिशं पालयेत् ॥ ९८ ॥

माहात्म्यं पुरुषस्य यस्य गदितुं वाहामहोत्साहिनो
स्वाहाजारकला वरांगकुसुमं स्वाहापतिश्चित्रकम् ।
देहार्धं समुपाश्रिता भगवती साहार्यराजात्मभू
राहारीकृतदारदो वितनुतां साहायकं मे शिवः ॥ ९९ ॥

ईक्षाद्यातनुवेशविश्वकलनादक्षात्ममायाबलं
रक्षाशिक्षणकारिणं सदसतां दक्षाध्वरध्वंसनम् ।
उक्षाधीश्वरकेतनं सुरगणाध्यक्षादिसंसेवितं
यक्षाधीशसखं नमामि गिरिशं कुक्षाविदं बिभ्रतम् ॥ १०० ॥

साक्षात् सर्वचराचरात्मकजगत्प्रेक्षानियन्तुः कृपा-
वीक्षालेशवशान्मया विरचिता दाक्षायणीप्रेयसः ।
द्राक्षापाकवनी स्तुतिः कथमियं प्रेक्षावतां संस्तुता-
पेक्षा गोचरमाशु नोपजनयेन्मोक्षावसानं सुखम् ॥ १०१ ॥

श्रीगोमतीचरणपंकजदासराम-
स्वामिप्रणीतमिदमीश्वरसन्मदाय ।
स्तोत्रात्मपद्यशतकं पठतां नराणा-
मिष्टार्थसंकलनकल्पकशाखिकल्पम् ॥ १०२ ॥

॥ शुभमस्तु ॥

॥ श्रीः ॥

# ॥ विष्ण्वष्टप्रासः ॥



आकाशानिलपावकोदकधराद्याकारवत्कारणं
लोकानां स्वपदांबुजं प्रणमतामाकांक्षितार्थप्रदम् ।
शोकापद्दुरितामयप्रशमनं नाकालयैस्सेवितं
श्रीकान्तं हृदि पद्मनाभममलश्लोकांबुधिं भावये ॥ १ ॥

एकान्ते भुजगेन्द्रभोगशयने श्रीकाश्यपीभ्यां समं
स्वाकांक्षासममिद्धकेलिमुदितं श्रीकामपालानुजम् ।
राकाकैरवजीवनौषधमहोनीकाशवक्त्रांबुजं
पाकारातिसहोदरं मुरहरं लोकाभिरामं भजे ॥ २ ॥

नाकाऽन्यूनरुचावनन्तनगरे प्राकारमालावृते
लोकासेचनके स्फुरन्मणितताविकाशमवन्मण्डपे ।
कोकाकारपयोधरेन्दुवदन श्रीकाश्यपीविभ्रमा-
लोकानन्दिनमब्जनाभमनिशं कोकामहे मानसे ॥ ३ ॥

राकाचन्द्रसहस्रसुन्दरमुखं लोकाभिरामाकृतिं
शाकाहारनिरन्नवारि च मनस्तोकाशनैस्तापसैः ।
एकाग्रैरनुचिन्त्यमानचरणं श्रीकाश्यपीवल्लभं
प्राकारान्तरहीन्द्रभोगशयनं लोका विलोकामहै ॥ ४ ॥

---

कोकामहे = स्वीकुर्महे

लोका हे श्रृणुताऽध्यनन्तनगरं प्राकारमध्ये तटि-
स्लीकाशांबुधिकन्यकाशुभपरीपाकायमाणाकृतिम् ।
लोकासेचनकं हरिं बुधमनस्तोकावनं पश्यताऽ-
स्तोकानन्ददमब्जनाभमुदिरं शोकाघतापच्छिदम् ॥ ५ ॥

एकाम्रेश्वरपूजितः श्रुतिगिरामेकान्तगूढाशयो
लोकानां जननीं रमां भगवतीमेकामुरस्यावहन् ।
एकाश्मोज्वलमण्डपे पवनभुग्लोकाधिभूमञ्चके
राकाब्जप्रतिमे स्वपन्निवहरिर्लोकानवन्मामवेत् ॥ ६ ॥

लोकेशादिसमर्चितांघ्रिकमलं राकेन्दुबिंबाननं
साकेतादविशेषकां फणिपुरीं स्वाकेतयन्तम्मुदा ।
कोकेभाधिपकुंभकुड्मलकुचश्रीकेलिलोलं सदा
द्योकेशार्चितमब्जनाभममलश्लोकेडितं भावये ॥ ७ ॥

एकोविष्णुरिति श्रुतिस्मृतिनुतो लोकोत्तरप्राभवो
नेकोच्चावचभूतसर्गलयकृत काकोलकण्ठार्चितः ।
कोकोत्तुंगपयोधरां हृदि वहन् व्याकोचपद्मानना-
माकोकेरगृहात्मजां सुविमलश्लोकोऽब्जनाभोऽवतु ॥ ८ ॥

लेखाधीशमुखामरार्चितपदं शाखासहस्रोदितं
रेखाभूतदराब्जचक्रचरणं शाखाभृतान्दैवतम् ।
रेखाभिस्वरुचान्निराकृततटिल्लेखां श्रियं बिभ्रतं
व्योखाम्यंबुजनाभमेवशरणं कास्वादिभोगेशयम् ॥ ९ ॥

---

८. आकोकेरगृहात्मजां = मकरालयकन्यकां

९. व्योखामः = गच्छामः  कास्वा...शयम् = पवनाशनभोगशायिनम्

नागाधीश्वरभोगिभोगशयनं नागाशनस्यन्दनं
नागाधीश्वरमोक्षदायिकरुणं नागाधिराज्यग्रजम् ।
नागाधीश्वरवक्त्रमामकमजं नागालयाधिष्ठितं
नाऽगारातिसहोदरं भज मनो नाऽगाधबोधं हरिम् ॥ १० ॥

मागा मानस हेऽन्यतः क्वचिदये नागाधिभूशायिनो
यागाशाधिपसोदरात् भगवतो भोगापवर्गप्रदात् ।
योगारूढनिषेव्यमाणचरणाद्रागात् स्वनामस्मृतां
द्रागापद्भयदुःखरोगशमनान्नागान्तकस्यन्दनात् ॥ ११ ॥

रोगाणामुपशान्तयेऽति महतां भोगावलीलब्धये
योगायात्मविवेचनाय दुरितत्यागाय च श्रेयसे ।
रागाद् भक्तितनूभृतोऽतिविमलान्नागान्तकृद्धोरणं
द्रागाराधय पद्मनाभमनिशं वागात्मधीवृत्तिभिः ॥ १२ ॥

वागीशार्चितपादपद्मयुगलो भोगीन्द्रभोगेशयो
योगीन्द्राशयपद्मभृंगतिलको द्रागीप्सितार्थप्रदः ।
नागीं श्रोणिपयोधरोरुजवने स्त्रीगीतकीर्तिं रमां
रागी बिभ्रदुरस्थले विजयते श्रागीश्वरस्यानुजः ॥ १३ ॥

नागेन्द्रातिमनोज्ञकोमलमहाभोगेशयानम्मुदा
नागेन्द्राभरणादिवन्दितपदं योगेन लभ्यं सताम् ।
रागेणोरसि संनिवेश्य कमलां नागेन्द्रकुंभस्तनीं
भोगे तत्परमब्जनाभमय हृन्नागेश्वरीसोदरम् ॥ १४ ॥

---

१०. हे मनः न न भज = भजेत्यर्थः

श्रृंगारामृतसारपूरितमहाभृंगारवक्षोरुहां
श्रृंगालीललितालकां शशिमुखीं श्रृंगारयोन्यंबिकाम् ।
अंगाऽऽधाय भुजान्तरे प्रमुदितं तुंगाहिमञ्चेशयं
गंगातातपदांबुजं भज मनोऽनंगारिणांगीकृतम् ॥ १५ ॥

गंगातातधराधरेश्वरमहाश्रृंगातिभागोपुरोत्-
संगाष्टापदकुंभचुंबितवियद्गंगातरंगे शुभे ।
तुंगाष्टापदकेतुमत्यहिपुरे तुंगाहिभोगेशयं
गंगावल्लभकन्यकाकृतरतासंगाब्जनाभं भजे ॥ १६ ॥

मेघापायतुषारदीधितिमुखं मेघाभिरामाकृतिं
व्याघातं विबुधद्विषां विदधतं साधाशयानां हरिम् ।
मोघाशीकृतदुर्जनं करलसज्ज्याघातचिह्नं महाऽ-
मोघात्मव्यवसायमब्जनयनं श्लाघामहे माधवम् ॥ १७ ॥

वाचां मौलिभिरप्रणेतृकभुवामाचार्यवर्यैर्मुहु-
श्शौचाचारपरैर्विचार्य बहुधा वाचाभिराविष्कृतम् ।
नीचामप्यसयन्तमुन्नतपदं स्वाऽचाल्यभक्तीन्मुदाऽ-
नाचारार्त्तिदमब्जनाभमधिकं याचामहे सन्मतिम् ॥ १८ ॥

अञ्चामात्मनि पद्मनाभचरणं मुञ्चाम जन्माटवी-
सञ्चारश्रमदुःखमाशु महतीमञ्चाम तां निष्कृतिम् ।
सिञ्चाम प्रमदाश्रुभिर्निजतनुं किञ्चानपाये पदे
पञ्चात्मप्रलये निरन्तरसुखे कञ्चामहे वैष्णवे ॥ १९ ॥

---

हे हत् अब्जनाभ अय = गच्छ

गुच्छानामतसीभुवां समुदयैस्सच्छायकायं विभुं
स्वच्छान्तःकरणारविन्दमधुपं सच्छास्त्रयोनिं हरिम् ।
इच्छागोचरदानकल्पकतरुं विच्छायतां स्वंपदं
विच्छायीकृतवारिजन्म शरणं गच्छामि शेषेशयम् ॥ २० ॥

व्याजानन्वितभक्तियोगसुलभं पूजाकृतां कामदं
श्रीजानिं भुजगेशयं भुवनकृद्बीजाब्जनाभं प्रभुम् ।
भूजान्यर्चितवञ्चिवंशजमहाराजावतंसीकृतां—
भोजातंघ्रिमुपास्महे हृदि परिव्राजा समभ्यर्चितम् ॥ २१ ॥

बीजापूरकपित्थचूतकदलीराजादनोदुंबर-
श्रीजात्यादियुतामनन्तनगरीव्याजां पुरीमामरीम् ।
आजानामलभूरिभूसुरमुखां नैजालयीकृत्य य-
श्रीजानी रमते स मेऽस्तु शरणं गोजातनाभो हरिः ॥ २२ ॥

आज्ञाकिंकरिताखिलक्षितिभृतां विज्ञानधौतामल-
प्रज्ञानां भुवि चेरवंशजनुषां राज्ञां परं दैवतम् ।
विज्ञानांबुधिपन्नगेन्द्रशयनं प्रज्ञानमात्रं परं
यज्ञाराध्यमुरस्थलस्थकमलं विज्ञाब्जनाभं भज ॥ २३ ॥

चेटीभूतसुरासुरेन्द्रपटलीकोटीरकोटीमणी-
कोटीरश्मिकरंबितातुलतुलाकोटीकपादांबुजम् ।
पाटीरागरुगन्धवत्कुचतटीशाटीकलक्ष्मीमुखाद्
वीटीग्राहकमब्जनाभमयि हृत्पेटीपदं कुर्महे ॥ २४ ॥

शिष्टानां स्वपदांबुजं प्रभजतां रिष्टापहं पुष्टिदं
दुष्टानां भुवनद्रुहां बहुतराऽरिष्टावहं विष्टिदम् ।
हृष्टात्मावसतावनन्तनगरे पुष्टाहिभोगेशयं
सृष्टाशेषजगद्वधूकुचभराश्लिष्टाब्जनाभं भजे ॥ २५ ॥

कण्ठाश्लिष्टसुधापयोधितनयोत्कण्ठासितोरस्थलोऽ-
कुण्ठाग्रायुधकृत्तदानवचमूकण्ठावलिस्संगरे ।
कण्ठाध्यासितकालकूटशिववैकुण्ठालयैर्वन्दितोऽ-
कुण्ठाशीकृतसंश्रितो धरणिवैकुण्ठाब्जनाभोऽवतु ॥ २६ ॥

श्रेष्ठानां स्वपदाब्जमेव भजतां ज्येष्ठार्तिविध्वंसनं
काष्ठापालकमौलिरत्नविलसत्पृष्ठांघ्रिपद्मं भजे ।
काष्ठापन्नशरीरकान्तिकमला प्रेष्ठाब्जनाभं फणि-
ज्येष्ठाधीश्वरशायिनं घनतमःकाष्ठाग्निनामस्मृतिम् ॥ २७ ॥

चूडालंकृतचारुचन्द्रशकलक्रीडाऽचलस्थानभू-
व्रीडादायिविभूत्यनन्तनगरीचूडायमानालये ।
क्रीडालोलजगत्प्रसूतिरमणीक्रीडानिकेतायित-
क्रोडान्तं जलजातनाभममलैरीडामहे वाङ्मयैः ॥ २८ ॥

पीडाकारिवलान्तकारिनिकरक्रोडान्तरोत्पाटन-
क्रीडाकारिसुदर्शनादिविनुतः क्रोडाधिरूढेन्दिरः ।
क्ष्वेडाहारिसमर्चिताखिलजगन्नीडायमानोदरो
व्याडाधीशशयो धुनोतु भगवान् पीडामशेषां मम ॥ २९ ॥

चण्डाभीशुसुधामयूखनयनोऽखण्डाब्जबिंबाननः
शुण्डाकाण्डसुवृत्तपीवरभुजादण्डात्तचण्डायुधः ।
गण्डान्तोज्वलकुण्डलांबुधिसुतातुण्डाब्जपुष्पन्धयो
मुण्डारातिरहीन्द्रभोगशयनश्चण्डामयान् हन्तु मे ॥ ३० ॥

वोढारं सचराचरस्य जगतो लेढारमस्य क्षये
सोढारं सकलागसां प्रणमतां गूढात्मतत्वं परम् ।
रोढारं हृदयांबुजेषु भजतां प्रौढाब्धिकन्याभुजा-
गाढालिंगितमब्जनाभमनिशं मूढा भजध्वं सदा ॥ ३१ ॥

वीणावेणुमृदंगशंखपटहक्काणादिनान्दीकरे
स्त्रीणामद्भुतनृत्तगीतलसिते घ्राणातिसन्तर्पणे ।
प्रीणानन्तपुरे फणीन्द्रशयनान् शोणाधरांभोधिजा-
प्राणान् पूर्णकृपांबुधीनरुणदक्कोणानपेक्षामहे ॥ ३२ ॥

एणांकायुतबिंबसोदरमुखश्शोणाधरस्सुन्दर-
स्त्राणायाऽखिलदेहिनां करलसद्बाणासनो नन्दकी ।
क्षोणावुत्तमभास्यनन्तनगरीकोणान्तराले जगत्-
प्राणाशाधिपभोगिभोगशयनः प्रीणातु पद्यैर्मम ॥ ३३ ॥

श्रेणीभूतमधुव्रतभ्रमणकृद्वेणीलसन्मल्लिकां
वाणीनिर्जितवल्लकीं सुविपुलश्रोणीभरोरुस्तनीम् ।
तूणीराकृतिजंघिकां जलधिजां क्षोणीं च संवाहयन्
नाणीयस्स्तनयोस्सुखी पुलकयन् प्रीणीत मे शेषशीः ॥ ३४ ॥

वर्णानाम्मुखबाहुसक्थिचरणोदीर्णात्मनां सञ्चयैः
पूर्णाम्मन्दिरयन्ननन्तनगरीं कीर्णां समृद्धापणैः ।
पर्णागारनिवासिभिर्मुनिवरैः पर्णाशनैस्सेवितोऽ-
पर्णायास्सहजस्सुखं दिशतु मे कर्णाक्षभोगेशयः ॥ ३५ ।

भूतानाम्महतान्निदानममलो भूतान्तरात्मा विभुः
व्राताशेषचराचरस्सुरनरैर्गीतापदानो हरिः ।
पूतानन्तपुरीविहाररसिको धौताहिभोगेशयो
दाता वर्गचतुष्टयस्य जगतां नेताऽब्जनाभोऽवतु ॥ ३६

मातारं भुवनत्रयस्य भजतां दातारमुच्चैश्श्रियां
त्रातारं शरणागतस्य महितं वेतात्मना यज्वभिः ।
जेतारं सुरवैरिणां मुनिवरैर्ध्यातात्मरूपं भजे
पीताभांशुकमब्जनाभमनिशं श्वेताहिभोगेशयत् ॥ ३७ ॥

व्यक्ताव्यक्तसमस्तकार्यजनकं युक्तात्मभिर्भावितं
मुक्तानामुपसर्प्पणीयचरणं त्यक्ताभिमानप्रियम् ।
मुक्ताहारविभूषिताब्धितनयासक्तान्तरंगं भजे
भक्ताभीष्टदमब्जनाभमनिशं रक्तान्तनेत्रांबुजम् ॥ ३८ ॥

मत्तानां भुवनद्रुहान्दितिभुवां कृत्ताखिलांगं ज्वलद्-
वृत्ताकारसहस्रधारशिखया दत्ताभयं साधवे ।
मत्तानेकपगामिलोकजननीचित्तानुसारे रतं
सत्तामात्रमनन्तभोगिशयनं हृत्तापशान्त्यै भजे ॥ ३९ ॥

लिप्ताङ्गं हरिचन्दनेन भजतां लुप्ताखिलार्तिं सतां
तप्तानां परितापहारिचरितं क्लृप्ताखिलं लीलया ।
सप्ताश्वक्षणदाकरात्मनयनं गुप्ताशयं पालकं
सप्तानां जगतामनन्तशयनं तृप्ताब्जनाभं भजे ॥ ४० ॥

शान्ताकारमनन्तभोगशयनं शान्तान्तरंगप्रियं
कान्ताध्यासितवक्षसं शमधनस्वान्तारविन्दालिनम् ।
तान्तानां शरणप्रदं भवमहाकान्तारसञ्चारतः
श्रान्तानामरविन्दनाभमनिशं स्वान्ताश्रय श्रेयसे ॥ ४१ ॥

हन्तारं सुरवैरिणां प्रणमतां सन्तापसंहारिणं
मन्तारं स्वपदं भवाख्यजलधिं सन्तारयन्तं विभुम् ।
रन्तारं दृढभक्तियोगमनसामन्तारमावल्लभं
हन्ताऽनन्तपुरे भजन्ति कृतिनोऽनन्ताहिभोगेशयम् ॥ ४२ ॥

चिन्तां सन्त्यज गोचरीकृतधराकान्तार्थपुत्रादिकां
स्वान्तालोकय पद्मनाभमनिशं सन्तापहारं सताम् ।
सन्तानद्रुनवप्रवालचरणं चिन्तामणिं ध्यायतां
तन्तापिञ्छनिभं भुजंगशयनं सन्तारकं संसृतेः ॥ ४३ ॥

हेतुं सर्वचराचरस्य सकलं धातुं प्रविश्य स्थितं
ध्यातुं शक्यमचञ्चले हृदि महासेतुं जगद्धारकम् ।
केतुं वञ्चकसञ्चयक्षयकरं त्रातुं जगज्जाग्रतं
यातुं सद्गतिमब्जनाभममलैस्तोतुं यतध्वं पदैः ॥ ४४ ॥

शान्तिं लब्धुमनुत्तमां सुमहतीं कान्तिं विधातुं तनोः
कान्तिं पूरयितुं परात्मविषयां भ्रान्तिं प्रणेतुं लयम् ।
क्लान्तिं संसृतिजां विहातुमतुलक्षान्तिं पुराणैश्शुभैः
कान्तिं कामपि केऽप्यनन्तपुरविश्रान्तिं दृशोस्तन्वते ॥ ४५ ॥

आर्त्तिन्नार्च्छति स प्रयाति महतीं कीर्त्तिं जगद्विश्रुतां
पूर्त्तिं सर्वमनोरथस्य भजते ज्ञार्त्तिन्नयत्यात्मनः ।
स्फूर्त्तिं विन्दति वीक्षते मुरजितो मूर्त्तिं भुजंगेशयां
मूर्त्तिं कामपि बिभ्रतीमुरसि विष्फूर्त्तिं व यो वैद्युतिम् ॥ ४६ ॥

कर्त्तारं सचराचरस्य जगतो भर्त्तारमात्मेच्छया
हर्त्तारं शरणंयतां भवमहावर्त्तास्समुद्धारकम् ।
मूर्त्तां पुण्यपरंपरामिव रमां धर्त्तारमात्मोरसा
वार्त्तायाहिशयं श्रिया विजितसंवर्त्ताब्जनाभं भजे ॥ ४७ ॥

भीतिध्वंसकरं स्मृतन्तनुभृतां प्रीतिप्रदं चक्षुषा
भूतिक्षेमविधायि पीतमधिकं प्रीतिप्रियास्त्वश्रिया ।
रीतिस्फूर्त्तिविधायकं घनरुचां ज्योतिः किमप्यद्भुतं
भाति ब्रह्म परं ह्यनन्तशयनं ज्योतिष्करं ज्योतिषाम् ॥ ४८ ॥

सक्तिस्सज्जनसंगमेषु परमासक्तिस्तदाराधने
मुक्तिर्दुर्जनसंगतेश्च विमला सूक्तिर्मुखे सूनृता ।
युक्तिश्रुत्यनुसारिणी स्वविहिताऽमुक्तिश्च येषां दृढा
भक्तिः पंकजनाभपादकमले मुक्तिर्वृणीतेहि तान् ॥ ४९ ॥

---

४६. यः पुरुषः, वैद्युतींविद्युत्संबन्धिनीं, विष्फूर्तिं विष्फुरणं व इव स्थितां कामपि मूर्तिं लक्ष्मीं, उरसि बिभ्रतीं मुरजितः मूर्तिं वीक्षते पश्यति सः आर्तिं न्नार्च्छति इत्यादि ।

उक्तं यच्छ्रुतिमौलिभिस्सुविमलैर्युक्तं समस्तैर्गुणैः
त्यक्तं जन्मजराविपत्तिमरणैर्मुक्तं समस्तैरघैः ।
नित्कन्नित्यमनन्तमद्वयमजं व्यक्तं परं ब्रह्म त-
द्युक्तं वक्षसि पद्मया सुकृतिभिर्न्नक्तंदिवं सेव्यते ॥ ५० ॥

शक्तिस्सर्वचराचरस्थितिकरी भक्तिश्च यस्या दृढं
भुक्तिस्थेमकरी चिरन्तनगवीशुक्तिस्थमुक्ता तनुः ।
मुक्तिर्यद्विदुषां प्रभूतकमलासक्तिर्भुजंगेशया
व्यक्तिः पुण्यततेरनन्तपुरि सा पक्तिर्नृणां दृश्यते ॥ ५१ ॥

भूतं भव्यमिदं भवच्च निखिलं भूतं यदेकाश्रयं
जातं जीवति संपरैति नियतं गीतं श्रुतेर्मौलिभिः ।
पूतं ब्रह्म सनादनन्तनगरे पीतं सुकृल्लोचनैः
प्रीतं भोगिशयं हृदिस्थकमलं पोतं भवाब्धेर्भजे ॥ ५२ ॥

हस्ताधिष्ठितभक्तवाञ्छितफलं शस्तापदानं सुरै-
र्न्यस्ताशेषभरस्य नैजचरणे ध्वस्तापदं सौख्यदम्
अस्ताद्रिं परितापचण्डतरणेर्विस्तारिवक्षस्थला-
ध्यस्तांभोधिसुतं भुजंगशयनं प्रस्तावये श्रीहरिम् ॥ ५३ ॥

आर्त्तानामखिलार्त्तिनाशनकरं पूर्त्तादिकन्तन्वतां
वार्त्ताधिक्यविधायकं श्रुतिशिरोवार्त्तान्तरंगं हरिम् ।
मूर्त्तां भाग्यपरंपरामिव रमां मूर्त्तावजं बिभ्रतं
मार्त्ताण्डन्तमसान्निपीय नयनैः कार्त्तार्थ्यमाप्तासहे ॥ ५४ ॥

व्याप्ताशेषचराचरं स्वमहसा नाप्तातिदूरं सतां
आप्तानां सुलभं स्वपादमयतां प्राप्ताखिलार्थप्रदम् ।
गोप्तारं सकलस्य वक्षसि तटिद्दीप्तां श्रियं बिभ्रतं
क्षेप्तारं निरयेऽघिनां मुरहरं प्राप्तास्म धन्या वयम् ॥ ५५ ॥

तीर्थालीपरिपूजितांघ्रिकमलं तीर्थावगाहप्रियं
पार्थार्थे स्वयमात्तसारथिपदं तीर्थावगाह्यं परम् ।
सार्थां कर्तुमिमामनन्तनगरीं सार्थावृतामास्थितं
सार्थास्तोंबुजनाभमेक्ष्यफणभृत्सार्थाधिराजेशयम् ॥ ५६ ॥

वेदादौ कथयन्ति यं श्रुतिविदो वेदावसानेऽपि यं
नादान्तप्रणवात्मकं तममलं वेदान्तवेद्यं शिवम् ।
पादान्ताद्वदनादितस्समुदितैर्वेदागमज्ञैःस्तुतं
श्रीयारं भुजगेन्द्रभोगशयनं वेदाहमे तं परम् ॥ ५७ ॥

वन्दारुव्रजवाञ्छितार्थघटनामन्दारपादांबुजं
कन्दाकारनिराकरिष्णुवपुषं कुन्दाभदन्तावलिम् ।
निन्दाहीनमहीनभोगशयनं मन्दाकिनीस्वं पदा-
मन्दानन्ददमब्जनाभमनिशं नन्दाम दृष्ट्वा दृशा ॥ ५८ ॥

सन्देशो निगमावली सलिलमुक्सन्देहदा देहभा
मन्देभ्योऽपि ददाति दर्शनमहो मन्देतरं सन्मदम् ।
तुन्दे यस्य जगत् समस्तजगदानन्देऽद्य शेषालये
तं देवं प्रणमाम्यनन्तशयनं विन्दे परान्निर्वृतिम् ॥ ५९ ॥

खादीनां जनकं समस्तजगतामादीनवैर्वर्जितम्
  नेदीयःपदपंकजं सुकृतिनां क्षोदीयसां दुर्लभम् ।
नेदीयस्युदधेः फणीन्द्रनगरे देदीप्यमानं विभुम्
  देदीप्यद्भुजगेशयं प्रणुमहे स्वादीयसामुत्तमम् ॥ ६० ॥

आधारे धरणीभुवां तनुभृतां बाधाविहीने महा-
  सौधाट्टालकवत्यनन्तनगरेऽगाधावबोधांबुधिम् ।
मेधाविप्रवराहिभोगशयनं सौधार्णवीवल्लभम्
  साधावादृतमब्जनाभममलं नाधामहे मंगलम् ॥ ६१ ॥

सिद्धान्तप्रतिदूरकर्तृकगिरां बुद्धाशयैर्वन्दितम्
  शुद्धान्तःकरणान् स्वपादशरणान् सिद्धार्थयन्तं जनान् ।
शुद्धान्तीकृतनागराजनगरं शुद्धान्तपद्मक्षसं
  बुद्धावासयताऽब्जनाभमनिशं श्रद्धालवस्साधवः ॥ ६२ ॥

दुग्धान्नादिसुतर्पितक्षितिसुरं दुग्धाब्धिजावल्लभम्
  स्निग्धांभोधरकान्तिसुन्दरतनुं मुग्धारविन्दाननम् ।
दग्धारिं घनसारचन्दनरसैर्दिग्धाखिलांगं हरिम्
  दुग्धाच्छाहिशयाब्जनाभमनिशं मुग्धा भजध्वं मुदा ॥ ६३ ॥

नानादेशभवैरनन्तनगरे नानान्ववायोद्भवै-
  र्नानाजीवनकैर्जनैः कृतपदे सेनाभिसंरक्षिते ।
नानापुष्पफलद्रुमोपवनके हीनाहिभोगेशयम्
  नानाम्नायगमब्जनाभमतुलं को नाम नोतुं क्षमः ॥ ६४ ॥

दीनानामवनं बहूपकरणाहीनाद्यहृद्यान्धसा-
न्दानाच्छ्रीवसतावनन्तनगरे श्येनाहिभोगेशयम् ।
सूनामंबुनिधेरनर्घमणियुक्सूनां श्रियं बिभ्रतम्
मीनाक्षीं भज पद्मनाभमुरसा पीनातिगाढस्तनीम् ॥ ६५ ॥

सेनानीजनकार्चितं श्रुतिशिरोमानावगाह्यात्मकम्
ज्ञानानन्दमयं भुजंगशयनं चीनांबरालंकृतम् ।
पीनांभोरुहकोशहेमकलशाऽन्यूनाभवक्षोरुह-
श्रीनाथं भजतामनन्तनगरस्थानामहो धन्यता ॥ ६६ ॥

मग्नानां भवसागरे भृशसमुद्विग्नात्मनां देहिनाम्
शुग्नाशायमहत्यनन्तनगरे लग्नामुरस्यब्धिजाम् ।
भुग्नानीलकचां मुदाऽभिरमयन् भग्नार्त्तिरात्मेक्षकान्
मग्नान्मुज्जलधौ दधद्विजयते दिग्नागशायी हरिः ॥ ६७ ॥

स्यानन्दूरपुरेन्द्रभाग्यजलधेर्मानम्मनोनन्दन-
ध्यानं दानवनाशनं जगदुपादानं निदानं श्रियाम् ।
ज्ञानं सत्यमनन्तमंबुधिसुतामानन्दयन्तं रतै-
रानन्दं भुजगेशयं विमृशतामानन्ददायं भजे ॥ ६८ ॥

विन्नात्मानमकृत्रिमोक्तिशिरसा भिन्नात्मधीदुर्गमं
खिन्नानां भवसंज्वरेण भजतां छिन्नार्त्तिमात्मप्रदम् ।
छन्नाधान् कुमतीन् रुषा विदधतं सन्नाखिलाथान् श्रिता-
नन्नाद्यैस्सुहितांश्च भूरिकरुणाक्लिन्नाब्जनाभं भजे ॥ ६९ ॥

---

६५. सूनां = पुत्रीं । अनर्घमणियुक्सूनां = महार्हरत्नघटितकांचीं ।

शापापायविधायिनं करटवद्रूपाश्रितक्ष्मापतेः
कूपान्तःकृकलासरूपकनृगक्ष्मापालमोक्षप्रदम् ।
भूपालावलिमौलिलालिततमश्रीपादपद्मं मुदा
श्रीपाण्यंबुजलालितांघ्रिकमलं भूपाब्जनाभं भजे ॥ ७० ॥

पापारण्यदवानलं स्मृतवतां तापाग्निपाथोधरं
रूपाधः कृतसुन्दरान्तरमिदंव्यापारलीलाकरम् ।
कोपाद्युज्झितमानसांकणमणीदीपायमानं विभुं
भूपालीधरभोगिभोगशयनं श्रीपामहं भावये ॥ ७१ ॥

भूपानां शुभवह्निवंशजमणीदीपात्मनां दैवतं
पापानां शमनाय भूतलजुषां तापापनोदाय च ।
आपादाशिखरम्यरूपमवलंब्याऽऽपाण्डराऽहीश्वर-
स्वापाकृत्रिमतल्पशायमखिलारोपाश्रयं संश्रये ॥ ७२ ॥

वापीकल्पगभीरनाभिकुहरव्यापीनवक्षोरुह-
स्तूपीकाब्धिसुतालिराजरमणीव्यापीतवक्त्रांबुजम् ।
आपीतांबरमध्यनन्तनगरं भूपीठनागेशयं
गोपीथप्रियमात्तपुण्यनयनैरापीतमूर्त्तिं भजे ॥ ७३ ॥

कल्पान्तानलकल्पकोपतृणिताऽनल्पामरारिव्रजं
कल्पाऽनोकहकल्पमर्थिजनसंकल्पाश्रिताऽर्थार्पणे ।
जल्पाकोज्वलरत्ननूपुरमुखाकल्पाभिरामाब्धिजा-
तल्पालंकृतवक्षसं भज सखेऽनल्पास्यनागेशयम् ॥ ७४ ॥

पंपातीरजकुंभिकुंभवरभीकंपापहोरोभुवा
शंपाभासुरया पयोधिसुतया संपादितोरःश्रियम् ।
शंपासन्ततिसन्निवेशविलसत्कंपायिमेघच्छविं
तं पाथोरुहनाभमेव भज तल्लुंपाऽखिलं पातकम् ॥ ७५ ॥

बिंबादर्शकपोलकं सितमहोबिंबानुबिंबाननं
लंबालिप्रकरप्रकारिचिकुरं बिंबाभिरामाधरम् ।
संबाधिस्तनलंबिमौक्तिकमणिस्तंबाब्धिजाविभ्रमा-
संबाधालयवक्षसं त्रिभुवनालंबाब्जनाभं भजे ॥ ७६ ॥

जंभारातिपुराहृतैर्भृगुभुवा रंभादिसन्तानभू-
रंभास्तंभवरोरुरत्ननिकरैस्संभादनन्तालये ।
कुंभाकारपयोधराब्धितनयासंभावितोरस्थलं
सं भान्तं भुजगेन्द्रभोगशयनं संभावये श्रीहरिम् ॥ ७७ ॥

कामानामुपपादकं प्रभजतां सोगावतंसप्रियं
नामानुस्मरतां निजं स्थिरतरक्षेमावहं पापहम् ।
श्यामांभोधरसुन्दरं हृदि रमां श्यामां दधानं भजे
हेमाभामरविन्दनाभमुरगग्रामाधिभूशायिनम् ॥ ७८ ॥

व्योमाद्यन्नमयान्तविश्वजननाऽसामान्यमायाबलं
क्षेमाणां प्रतिपादनाय भविनां भुमावनन्तालये ।
भूमानं धृतयोगनिद्रमुरसा रामामणीं बिभ्रतं
श्यामामंबुजनाभमेव शरणं यामाहिभोगेशयम् ॥ ७९ ॥

सत्यानन्दचिदात्मकं निगदितं श्रुत्याशिरोभिर्बुधैः
नित्याऽनित्यविवेकमुख्यकरणैर्मत्या मतं शुद्धया ।
क्षित्यामद्य तदेव पन्नगपुरे तत्या नरश्रेयसां
प्रत्यासन्नमहो महो नयनयोस्तृत्यां वरीवृत्यते ॥ ८० ॥

अद्यानन्तपुरीं जितामरपुरीमुद्यानजालावृतां
हृद्यामेत्य हरिर्दिवोऽतिकुतुकी हृद्यादधानश्रियम् ।
विद्याशेषविभोगिभोगशयनो विद्याधरैर्वन्दितः
पद्यामाश्रयते दृशामुपनिषद्विद्याऽभिगम्यो नृणाम् ॥ ८१ ॥

आरामैर्जितनन्दनैरुपचिते वारान्निधेस्तीरगे
सारार्थैर्विलसत्यनन्तनगरेऽगारावतंसान्तरे ।
आरात् श्रीबलिमण्डपेन लसिते धाराधरश्यामलः
पारावारसुवा सहाऽहिशयनो नारायणो राजते ॥ ८२ ॥

तीरे दक्षिणवारिधेश्शुकनदीतीरे शुभे पश्चिमे
पूरेका निजसंपदा जितमरुत्पूरेधते श्रीमती ।
तीरे तत्र स पत्मतीर्थसरसो नीरेण तुल्यामृत-
क्षीरेणोपचितस्य भाति पवनाहारे शयानो हरिः ॥ ८३ ॥

भद्रापादक भद्रदीपकमहैर्भद्रात्मवञ्चीश्वरैः
सद्राजावलिमाननीयविभवैर्भद्रार्थनिर्वर्त्तितैः ।
भद्राण्येधयमानमत्र नगरे विद्रावयन्तं रिपून्
निद्राणं सरसं फणीन्द्रशयमुन्निद्राब्जनाभं भजे ॥ ८४ ॥

सत्त्राणां प्रतिपादनेन महतां सत्राशनान् धिन्वतां
सुत्राम्णां भुवि वह्निवंशजनुषां सत्राणबद्धात्मनाम् ।
अत्रानन्तपुरीष्टदैवतमजं वित्रासितारिं हरिं
सत्रा सिन्धुभुवा भुवा कृतरतिं सत्राऽब्जनाभं भजे ॥ ८५ ॥

यत्रान्योन्यनिबद्धमैत्रमनसो मित्रार्थदारक्षमा-
पुत्रागारसुखोपपत्तिमुदिताः पित्रादिभक्ता जनाः ।
तत्राऽनन्तपुरे फणीन्द्रशयने पत्रावलीं कुंकुमैः
चित्रामारचयन् श्रियः कुचतटे स त्रायतां वो हरिः ॥ ८६ ॥

पारावारसुताविहाररसिकं धाराधरश्यामलं
घोरापारभवांबुराशिसुखसन्तारार्थनौकांघ्रिकम् ।
हीराद्युज्ज्वलकंकणांगदमणीहारावलीभूषितं
सारात्सारतरं सरोजनयनं वाराशिशायं भजे ॥ ८७ ॥

माराराितमनःप्रियं जलधराकारानुकारिप्रभं
सारासारविवेकशून्यमनसां दूरांघ्रिपङ्केरुहम् ।
आरान्नम्रसुरासुरेश्वरकुलं धीराहिभोगेशयं
क्षीरांबोधिसुताविलासरसिकं साराब्जनाभं भजे ॥ ८८ ॥

लीलाकल्पितसर्गपालनलयं कालांबुदश्यामलं
बालार्कद्युतिरत्नशोभिमकुटं नीलालकं सुन्दरम् ।
लीलालोलरमाऽतिखेलनचतुश्शालायितोरस्थलं
व्यालाधीश्वरभोगिभोगशयनं शीलाब्जनाभं सखे ॥ ८९ ॥

चूलीलालितपारिजातसुमनःपालीकपाथोधिजा–
केलीधामभुजान्तरं बुधमनोनालीकपुष्पन्धयम् ।
नालीकासनजन्ममन्दिरमहानालीकनाभं विभुं
कालीवल्लभवल्लभं फणिशयं नालीकनेत्रं भजे ॥ ९० ॥

देवानां कुलदैवतं सुखकरं सेवापराणां सदा
जीवानां बहुधा विभिन्नवपुषामावासभूतोदरम् ।
श्रीवासस्थलवक्षसं शुभकरं देवारिसंहारकं
नीवाराशनसेवितं फणिशयं श्रीवासनाभं भजे ॥ ९१ ॥

सर्वाऽनर्थनिबर्हणांघ्रिकमलं सर्वार्थसन्दायकं
गर्वापेतमनोनिवेशितपदं शर्वादिसंसेवितं ।
पर्वानुष्णमयूखसुन्दरमुखं निर्वाणदं शाश्वतं
सर्वाहीश्वरशायमंभसिरुहान्तर्वासिनीशं भजे ॥ ९२ ॥

आशापालकवन्द्यमानचरणं क्लेशापनोदं सतां
वैशाखामृतरश्मिसुन्दरमुखं वैशारदीशेवधिम् ।
दाशार्हं दशरूपकल्पितविपन्नाशाभियुताऽखिलं
श्रीशालीकृतवक्षसं भज भुजंगेशाधिशायं हरिम् ॥ ९३ ॥

ईशानं जगतां त्रयस्य भजतामाशासितार्थप्रदं
नाशायाऽमरविद्विषां करधृतश्रीशार्ङ्गबाणासनम् ।
केशालंकृतपारिजातसुमनश्श्रीशालितोरस्थलं
वैशाखाद्रिधराब्जनाभमुरगाधीशाधिशायं भजे ॥ ९४ ॥

आशापप्रथमोपलालिजलमुक्तालारविन्दादिकैः
केशाकेशिविधायिकायसुषमं केशालयान्तःपुरम् ।
ईशानार्चितपादपद्ममुरगाधीशाहिभोगेशयं
केशागारसुतां दधानमुरसा केशाधिनाभं भजे ॥ ९५ ॥

शेषाहीश्वरशायिनं पदनताशेषार्थसन्दायिनं
भूषाभूषितविग्रहं विपुलसन्तोषावहं पश्यताम् ।
आषाढांबुधराभिभावुकरुचं योषामणीमिन्दिरां
दोषां बिभ्रतमन्तरे मुरहरं भाषाभिरीडामहे ॥ ९६ ॥

काषायांबरधारिभिश्शमधनैराषाढिभिः पूजितं
शेषाहीशशयं नृपालमकुटीभूषामणीयत्पदं ।
केषां चिद्धृशिवर्त्तते सुकृतिनां वेषाभिरामं महः
कोषाढ्ये चतुरन्तकैक्कमहापाषाणवन्मण्डपे ॥ ९७ ॥

भासा भासितकालमेघमहसं मासासमानाननं
मासाहारसमर्चितं सुबहुधा व्यासादिभिर्वर्णितम् ।
आसाद्यं नयनैरनन्तनगरीवासावदातात्मनां
श्रीसारस्यनिकेतनं फणिशयं कासारनाभं भजे ॥ ९८ ॥

बाहाध्यासितभक्तवाञ्छितफलं मोहान्धकारारुणं
देहाभाजितकालमेघमहसं स्वाहाभुजंगाननम् ।
आहारप्रदमायतां निजपदं वैहायसैर्वन्दितं
बाहाभ्यन्तरलालिताब्धितनयं व्यूहामहेऽहीशयम् ॥ ९९ ॥

ईक्षालेशकृताखिलेदमवने दीक्षाधरस्वाशयं
प्रेक्षावद्वरवह्निभूवलभिदां साक्षात्कृपापेक्षितम् ।
साक्षादंबुधिजापदांबुजलसल्लाक्षांकितोरस्थलं
शिक्षाद्यागमशिक्षिताहिशयनं प्रेक्षामहे माधवम् ॥ १०० ॥

साक्षात् सर्वचराचरात्मकजगत्प्रेक्षानियन्तुः कृपा-
वीक्षालेशवशान् मयाविरचिता दाक्षायणीज्यायसः ।
द्राक्षापाकवती स्तुतिः कथमियं प्रेक्षावतां संस्तुता-
पेक्षागोचरमाशुनोपजनयेन्मोक्षावसानं सुखम् ॥ १०१ ॥

श्रीगोमतीचरणपंकजदासराम-
स्वामिप्रणीतमिदमंबुजनाभतुष्टयै ।
स्तोत्रात्मपद्यशतकं पठतान्नराणां
इष्टार्थसंकलनकल्पकशाखिकल्पम् ॥ १०२ ॥

॥ शुभमस्तु ॥

---: * :---

# INDEX TO VERSES

## ॥ देव्यष्टप्रासः ॥

—: * :—

## ॥ शिवाष्टप्रासः ॥

—:*:—

## ॥ विष्णवष्टप्रासः ॥

—:*:—

# ERRATA

| Page | Sloka | Line | For | Read |
|---|---|---|---|---|
| ३ | १० | २ | तुगामर्त्यं | तुंगामर्त्यं |
| ६ | ३५ | ४ | भवाम्बुद वेर्मां | भवाम्बुदर्धि मां |
| ९ | ३९ | २ | कन्दानून | कुन्दानून |
| १० | ४३ | १ | संजीवनी | संजीविनी |
| ११ | ५० | ३ | पूपांक | यूपांक |
| १४ | ६३ | ३ | नित्यं | नत्या |
| १४ | ६४ | २ | चपन् | पचन् |
| १४ | ६४ | ४ | सुखा | सुखं |
| १४ | ६७ | ४ | भोज्यान्नैस्वधियाधितैः | भोज्यान्नैस्वधियार्पितैः |
| १५ | ६८ | ३ | दैन्यार्तिं | दैन्यार्त्तं |
| २० | ९५ | ४ | मानसं | मानसे |
| २१ | ९७ | ३ | धरणी | शरिणी |
| २१ | १०१ | ३ | परिणतिः | परिणुतिः |
| २८ | २३ | ३ | दशं | दृशं |
| २९ | २४ | २ | गाण्डीवने | गाण्डीविने |
| २९ | २५ | २ | चूडालिनांघ्रिद्वयं | चूडालितांघ्रिद्वयं |
| २९ | २७ | ४ | प्रीणाना | प्रीणानां |
| ३० | २९ | १ | त्रीणीयानि | त्रीणीमानि |
| ३३ | ४५ | १ | समार्चितांघ्रिकमलं | समर्चितांघ्रिकमलं |
| ४३ | ९७ | १ | शंकर | शंकरं |
| ४७ | १३ | २ | पद्भभृंगतिलको | पद्मभृंगतिलको |
| ४८ | १५ | २ | शृंगाली | भृंगाली |
| ,, | ,, | ४ | गगातात | गंगातात |
| ४८ | १८ | ३ | नीचाम | नीचान |
| ४८ | १९ | १ | पद्भनाभ | पद्मनाभ |
| ४९ | २१ | ४ | भोजातंघ्रिं | भोजातांघ्रिं |
| ,, | ,, | ,, | परित्राजा | परित्राजां |
| ,, | २४ | ३ | पाटीरागरु | पाटीरागुरु |
| ५३ | ४० | ३ | पालक | पालकं |
| ५३ | ४४ | २ | ध्यातु | ध्यातुं |
| ५६ | ५७ | ४ | श्रीयारं | श्रीदारं |
| ५८ | ६९ | ३ | सन्नखिलाथान् | सन्नाखिलार्थान् |
| ६१ | ८४ | ३ | भद्राण्येधथ | भद्राण्येधय |

| | | | | |
|---|---|---|---|---|
| ४ | Foot note | | टीकेत् | टीकेत |
| ५ | १९ | १ | लसच्चुण्डा | लसच्छुण्डा |
| ७ | Foot note | | उत्कृष्टां उत्सन्तोषः | उत्कृष्टा मुत् सन्तोषः |
| ८ | ३४ | २ | श्रियाम् | श्रियम् |
| १० | ४७ | २ | संपाद् | संपात |
| १३ | ६२ | ३ | यस्या | यस्याः |
| १४ | ६७ | २ | वर्धुताशन | वद्धुताशन |
| ३२ | ४१ | २ | क्रोधात्मात | क्रोधाध्मात |
| ३७ | ६५ | ४ | स्यायां | स्वायां |
| ३८ | ६९ | १ | यौत | धौत |